




# ॥ दयाशतकम् ॥

श्री श्रीधरवेङ्कटेशार्येण

विरचितम् ।



श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितम् ।

१९११.






॥ श्रीः ॥

# ॥ दयाशतकम् ॥



श्रेयांसि संदिशति कन्दलयत्यमन्द-
मानन्दमस्य दलयत्यघबृन्दमार्तीः ।
धूनोति किंकरयति द्रुहिणादिकांश्च
मातस्तवैष उदयो हि दये पुरारेः ॥ १ ॥

कल्याणि शैलतनयाकमनानुकम्पे
त्वं यत्र यत्र वितनोषि पदार्पणानि ।
प्रागेव पद्मजवलोन्मथनादिलक्ष्म्यः
प्रादुर्भवन्त्यवहिताः खलु तत्र तत्र ॥ २ ॥

मन्दस्मितं मदनसुन्दरमिन्दुरेखा-
संनद्धशेखरमुमासखमुद्वहन्ती ।
दिव्यं वपुः किमपि दृक्पथगानघानां
मातर्मुदं हि तनुषे महतीं दये त्वम् ॥ ३ ॥

दिव्यं वपुस्तदनुसंदधतः पुरारेः
कांश्चिद्गुणाञ्जगति केचन निर्विशन्ति ।
आख्यामृतोर्मिरसिकास्त्वपरेऽभिनन्द-
न्त्यस्ताधयः शिवदयेऽम्ब तवावलम्बात् ॥ ४ ॥

आखण्डलोऽयमिति कश्चिदखण्डितश्री-
र्वित्तेश्वरोऽयमिति विश्रुतवैभवोऽन्यः ।
धातेति कोऽपि जगतां जनकस्तवामी
कल्याण्युमेशकरुणे परिणामभेदाः ॥ ५ ॥

ईशो हरः स जगतां ननु तस्य च त्व-
मीशा परार्तिविनिराकृतिराकृतिस्ते ।
तन्मामकार्तिहरणं करुणे न चेत्त्वं
धत्से कथं कथय देवि तवात्मलाभः ॥ ६ ॥

दाक्षायणीसहचरे गरलग्रहेण
दत्ताभये विरचितेऽम्ब दये भवत्या ।
अश्वद्विपाप्सरमरेशितुरच्युतस्य
श्रीकान्तता दिविषदाममृताशिता च ॥ ७ ॥

क्रूरेण हन्त गरलेन गलेऽनलेन
फाले शिरस्यपि तरङ्गवतीझरेण ।
क्रान्तं त्वदध्वगतमातनुषे दये स्वा-
धीनेश्वरा भवसि कः किमिहाभिधत्ताम् ॥ ८ ॥

काचित्त्वदीयकणिका मणिकाञ्चनाद्यै-
रर्थैर्धिनोत्यमुमिहारुचिहेतुरन्या ।
उल्लासयत्युडुपतिश्रितमौलिसीम्नि
त्वद्धाम्नि ते हि करुणे सरणिर्विचित्रा ॥ ९ ॥

भीषामहद्भयगिरोऽतिभयंकरत्वं
यस्याहुरुग्र इति भीम इति प्रथा च ।
क्षिप्त्वेव दासयसि देवि दये तमेनं
हा जिह्वयैतदभिधास्पृशि पुल्कसेऽपि ॥ १० ॥

नान्यो मदस्त्यगतिकोऽगतिकस्तव स्वं
शंभोर्दयेऽघपिशुना मयि शश्वदास्ते ।
सर्वज्ञता विदधती तव दुर्लभं मां
सज्जस्व मा जननि भूरपदे तु निःस्वा ॥ ११ ॥

स्वाधीनितेन्दुमकुटासि समर्थितोप-
मन्युप्रभृत्यभिमता जगति श्रुतासि ।
आयुष्मती जननि मन्तुभिरेव चासि
हा हन्त मां न करुणे कथमभ्युपैषि ॥ १२ ॥

शंभो त्वमेव शरणं मम चन्द्रचूडे-
त्याद्या गिरस्तदुचितस्थितिहानितो नः ।
सत्येतरा अपि विभुर्भजनाय यद्य-
द्गृह्णाति तद्धि करुणे चरितं भवत्याः ॥ १३ ॥

यदेशः कुप्येन्मे दुरितविसरैर्दैन्यधुरया
तदा मे हूताविर्भवतु भवती तस्य च पुरः ।
मदीयांहःसंहत्यपलपनरंहः प्रथयति
त्वदाविर्भावेऽसावलमिह दये किं कलयितुम् ॥१४॥

महेशे संक्रुद्धे मदघविदि मह्यं श्रितजन-
श्रमाक्षन्त्री देवि त्वमयि सहसाविर्भव दये ।
मदीयांहःसंहत्यपलपनरंहः प्रथयति
त्वदाविर्भावेऽसावलमिह दये किं कलयितुम् ॥१५॥

त्वया भाव्यं मातर्मयि शशिकलोत्तंसकरुणे
प्रणम्य त्वां याचे कति कति भवत्या न हि भृताः ।
जगत्येको वर्ते क्वचिदपि गतिं कांचिदपि न-
न्वपश्यन्नैवेदं सदृशमगतीनां तव गतेः ॥ १६ ॥

तवाध्वन्या धन्यास्तव हि भवनादन्तकरिपो-
र्यदेष्वेकेनैनं शिरसि धनुषा घातमदयम् ।
तथान्येन ग्राव्णां किरणमपरेणासिलतया
दयेऽनैषीन्मूर्धप्रविदलनमप्यम्ब भवती ॥ १७ ॥

प्रियोऽर्थोऽयं शंभोः प्रसदनविधेयाधिराम
इत्यथ द्वेष्योऽयं तत्प्रसदनविधेयक्षतिरिति ।
परोऽयं तत्रायोदय इति च तद्धीकृतखिल
न मे तद्धीर्भैवं मयि विमुखता ते शिवदये ॥१८॥

क्षिपन्कामिन्यादिष्वनवधिमिथोवैशसधुरा-
दुरापेष्वेष्वक्षप्रकरमधिबालेयवदनम् ।
मधुस्यन्दि द्राक्षाफलकुलमिवायुर्वितथय-
न्कियत्कालं सीदान्ययि मयि कदा स्याः शिवदये ॥

कदा गौरीनेत्राञ्चलसमुदितानङ्गचकिता-
न्कटाक्षांस्तांस्तच्च स्मितमधरबिम्बे कृतपदम् ।
मुखं शंभोस्तच्चोन्मृदितशरदिन्दुप्रियसखं
पुरस्तादादध्याः पुरभिदनुकम्पे जननि मे ॥ २० ॥

असावर्थः श्रेयानयमितर इत्यच्छमतिदाः
प्रजानां शर्माप्तावसुखविरहे च प्रतिभुवः ।
विभान्ति श्वासा यद्विधुशकलमौलेर्भगवत-
स्तदेतत्कल्याण्यास्तव विलसितं किं न करुणे ॥

स्मराराते शंभो पुरहर शिवोमाधव हरे
मुरारे गोविन्दामरवर मुकुन्देत्यविरतैः ।
शिवाख्यापीयूषोर्मिभिरयि दये मां कबलितं
कदा वा कुर्वीरंस्तव गुणझरा मज्जितहराः ॥ २२ ॥

समुन्मीलज्ज्वालाज्वलनकलितस्यान्तिकगतो
यथा तद्वद्दाराद्यभिरतिहतस्यान्तिकगतः ।
असावीष्टे नोज्जीवितुमहह का तस्य तु कथा
किमन्यज्जीवातुस्त्वमसि जगतोऽस्येशकरुणे ॥ २३ ॥

मयीशानं वामाशयमतितरां मज्जयतु ते
कदा पूरः स्वैरं कबलिततटो देवि करुणे ।
तथा द्रागुत्कर्षन्विघटितविघातव्यतिकरः
कदेशप्रेमाख्ये महति च पदे स्थापयतु माम् ॥

प्रियो द्वेष्योऽप्यर्थस्तुदति मम बुद्धिं तदितरे-
ऽप्यमी स्वैरं निघ्नन्त्यहह गिरिशालिङ्गनसुखे ।
प्रसक्तिः का वा स्याद्भगवति नमस्तेऽर्हसि न मा-
मियद्दूरीकर्तुं गिरिशकरुणेऽनन्यशरणम् ॥ २५ ॥

दये शंभोस्तद्भक्त्यमृतलहरीं तावकझराः
कदेहोपानेष्यन्त्यलमपनयन्तः प्रतिहतीः ।
तया चात्मा मेऽसावतिशिशिरितो हास्यति कदा
मनोजाद्युन्मीलद्दहनदहनोत्थं परिभवम् ॥ २६ ॥

महेशस्य प्रज्ञासमुचितविधानक्षमतया
ममाप्यैनोराशेरपि समवमर्शे सति न मे ।
समाश्वासस्याशा निजलहरिभिस्तं ननु विभुं
वितन्वाना मग्नं विहरसि यदि त्वं न करुणे ॥

दशायामेतस्यामपि शिवदये ते विमुखता
मयीत्थं चेन्मग्नो महति विपदब्धावहमसौ ।
अकीर्त्यब्धौ मग्ना त्वमपि मम यत्किंचनभव-
त्यपि स्वोद्धारे वा भवतु भवती प्रोद्यमवती ॥

कमलभवपदं वा कैटभारिश्रियं वा
मदनभिदनुकम्पे मङ्क्षु दातुं क्षमा त्वम् ।
किमु न दिशसि वीतक्लेशिकामासिकां मे
कचन शिवशिवेत्याख्यानधारैकतानाम् ॥ २९ ॥

हितमहितमवैतुं वर्तितुं चानुरूपं
न पुनरलमबोधानीशताभ्यां हतोऽहम् ।
प्रमथपतिदयेऽये पालयेस्त्वं कथं मां
कथमिव न च ते स्यात्ख्यातिभङ्गो न जाने ॥३०॥

तव भवति निवासस्तारकाधीशमौलिः
स च मदघभवोग्रामर्षपर्याकुलात्मा ।
समव तमनुकम्पे त्वद्रसौघावसेकै-
र्मम तदलमयि त्वं नावने मेऽर्थनीया ॥ ३१ ॥




अभिलपतु शिवाख्यामाहरेत्यादिदम्भा-
दपि सकृदयमेतस्याखिलार्तिं हरिष्ये ।
इति सततविनिद्रामिन्दुमौलेर्दये य-
द्यहमिव न जडः कोऽनन्यधीर्नाश्रयेत्त्वाम् ॥ ३२ ॥

चरति समनुरुन्धन्प्रेरणाधोरणीं ते-
ऽनिलगतिमिव तूलो ह्येष दोषं कुतोऽस्मिन् ।
गणयसि परतन्त्रे मन्नियोगादव द्रा-
गमुमिति करुणे तं त्वादिशेशं मदर्थे ॥ ३३ ॥

मदघविततिरन्तःसत्त्वमाविश्य शंभोः
प्रविघटयति योगं तस्य ते चानुकम्पे ।
तदपि निरुपमा मद्दैन्यसंपत्तिरेषा
प्रतिभवति पुनर्वां निर्भराश्लेषसंधौ ॥ ३४ ॥

दलयतु दिगिभौघो दन्तकाण्डैः कठोरै-
र्दहतु दहनमाला दारयत्वस्त्रजालम् ।
अपि धुरि परिवृण्वन्त्वब्धयो नैनमार्तिः
स्पृशति शिवदये यः स्पृश्यते तेऽनिलेन ॥ ३५ ॥

अधिजटमसुराराल्यापगा क्वापि लीना
मनसिजविनिहन्तुर्मज्जितोऽयं झरैस्ते ।
कबलयति निमङ्क्तु: सा श्रमं त्वं त्वमङ्क्तु:
कथमिव न दये ते स्वर्धुनीतो विशेष: ॥ ३६ ॥

प्रभवति न हि दातुं भद्रमीशो विना त्वा-
मलमपि तददातुं नाम्ब सत्यां भवत्याम् ।
वितरति च शुचं त्वद्विप्रकर्षे सतीश:
कथयितुमनुकम्पे कस्तवालं प्रभावम् ॥ ३७ ॥

मदनशतमनोज्ञं मञ्जुहासाननाब्जं
शरदुडुपतिगौरं साम्बमर्धेन्दुचूडम् ।
द्रविणमयि मदीयं दृक्पथे धत्स्व मे त-
त्तव खलु वशवर्तीत्यर्थयेऽहं दये त्वाम् ॥ ३८ ॥

त्वमसि मदवनार्थं नार्थनीया दये य-
स्तव भवति निवासो दु:सहं तस्य शंभो: ।
प्रशमय तममर्षोष्मातिरेकं ममाग:-
प्रभवमयि भवत्या निर्झरैस्तन्ममालम् ॥ ३९ ॥

पशुरिव परिभूतीरश्नुवानोऽपि शश्व-
द्विषयविसरमेतं हातुमप्यप्रगल्भः ।
विष इव विमुखस्ते वेश्मनीशे तथाहं
कथमिव करुणेऽङ्गीकारपात्रं तवाहम् ॥ ४० ॥

अवितरि पुरहन्तर्यस्य सर्वस्य जन्तो-
र्मम गतिरबलाद्या नन्वमी सोऽहमेषाम् ।
इति कुमतिहतस्तं चिन्तये हन्त नेशं
स तु कथमनुकम्पे स्यान्मयि त्वद्विधेयः ॥ ४१ ॥

विसृमरदहनार्चिर्विप्लुतोऽह्नाय शीतं
जलमिव करुणे संत्यक्तसर्वः कदाहम् ।
तव पदमुडुराडुत्तंसमानन्दसिन्धुं
श्रमहरमवगाहे दत्तहस्तो भवत्या ॥ ४२ ॥

मकुटगविधुनि त्वन्मन्दिरे स्थित्यलाभः
स्थितिरियमितरव्यासङ्गदावानले च ।
फलमहह दयेऽदः कस्य पापस्य वा द्रा-
क्तदिदमुदसनीयं दौःस्थ्यमम्ब त्वया मे ॥ ४३ ॥

तनुकरणकदम्बं दक्षमेवं मनस्त्व-
द्ग्रहचणमनुकम्पे नन्वदाः शंकराख्ये ।
प्रदिशसि मम किं न त्वन्निवेशे प्रवेशं
प्रददति भुवने किं प्राणशून्याय कन्याम् ॥ ४४ ॥

सगरलमधिकण्ठं सानलं फालदेशे
मदनमहिपरीतं सर्वतस्तेऽनुकम्पे ।
तदिदमुपगता ये तानिमांस्तन्वती त्वं
विहरसि जितमृत्यून्वीक्षितानप्यमीभिः ॥ ४५ ॥

न वितर पदमैन्द्रं न श्रियं वैधसीं वा
श्रितभुजगकुलेऽपि क्ष्वेलखेलद्गलेऽपि ।
मम घटय दये त्वन्मन्दिरे संप्रवेशं
विगलितविविधव्यासङ्गमेतन्ममालम् ॥ ४६ ॥

तव समुदयरोधं तत्परोऽसौ विधत्ते
स्वकचरितमहिम्ना स्वात्मघाती तमेनम् ।
भगवति ननु भर्तुं भ्राम्यसीशानुकम्पे
तव परहितनिष्ठा तादृशी स्तौतु कस्त्वाम् ॥ ४७ ॥

कियदिव विमुखत्वं चित्सुखात्मन्युमेशे
　रतिरपि कियती मेऽन्यत्र धिङ्मां ममास्य ।
असदपि न दये त्वं हास्यसि त्राणमद्धा
　तव क इह निरोद्धा दासयन्त्यास्तमीशम् ॥ ४८ ॥

अश्रूद्गमगद्गदवा-
　गविरलपुलकाढ्यया भवे भक्त्या ।
कति न रमन्ते मां शिव-
　करुणे कुरु तदनुगं ममैतदलम् ॥ ४९ ॥

करुणे तरुणेन्दुधर-
　स्त्वद्वशवर्तीति तव निशम्य यशः ।
तस्यावलम्बमीहे
　तद्घटने प्रतिभुवा त्वया भाव्यम् ॥ ५० ॥

जनिमृतिदहनार्चिःशान्तिदिव्यामृतौघे
　जननि शशिविभूषे त्वद्गृहे संप्रवेशम् ।
विघटयदनुकम्पे विघ्नबृन्दं विभिन्द-
　न्मयि पततु कदा त्वन्निर्झरः श्रान्तिहारी ॥ ५१ ॥

त्वमभिज्ञशिखामणौ महेशे
भजदत्यङ्कुशमन्तुसंततीनाम् ।
यदपह्नुतिपण्डिता दये त-
न्निरवद्यं तव वेद्मि साहसिक्यम् ॥ ५२ ॥

करुणे कथये किमाज्ञया ते
ह्यनुधावत्यहह स्मरन्ति ये तान् ।
मकुटव्यतिषङ्गिचन्द्ररेखं
मदनध्वंसि मदीयभागधेयम् ॥ ५३ ॥

हरिणार्भकमानने तरक्षो-
रिव कान्तादिमुखे भयानके माम् ।
विनिपात्य शिवो विलोकमानः
करुणे किं न कदर्थ्यते भवत्या ॥ ५४ ॥

करुणे तरुणेन्दुधारिणो
मद्धरणे शंस तवाम्ब को विलम्बः ।
गणितोऽयमहं किलाखिलाङ्गि-
ष्वयि किं तेषु न मामलेखयस्त्वम् ॥ ५५ ॥

अघवानिति मय्यसंगृहीते
सकलाघापहजातुनामवादः ।
अपि दीनजनात्रितेति कीर्त्यो
रवसादं करुणेऽभिधेहि शंभोः ॥ ५६ ॥

मम शंभुदये त्वदर्हताया-
महमन्यन्न विलोकयाम्युपायम् ।
मम चोदितयार्तिभिस्त्वयैव
श्रयणीया तदुपायता ब्रुवे किम् ॥ ५७ ॥

पुरभित्करुणे पुरन्दराद्यै-
स्त्वमुपास्या सुलभा न नस्तथापि ।
प्रचकास्ति परातिदुर्लभत्व-
त्पददर्शी ननु दीनताश्रयो नः ॥ ५८ ॥

भवतीशदये पयोदमाला
भवतीव्रानलशान्तिदाश्रितेषु ।
तमसामवसादिकाः शिवेक्षा-
तटितश्चित्रमचञ्चलाः प्रसूते ॥ ५९ ॥

करुणे शिवचन्द्रचन्द्रिकासौ
भवती सन्मणिसौधसंसदीव ।
प्रसृतापि मयीह तुच्छकुड्ये
तिमिरं लुम्पतु तावता क्षतिः का ॥ ६० ॥

कुतुकपरवशैरुमाकटाक्षैः
कुवलयभाजि नवोडुपावतंसे ।
जननि तव झरे निमग्नमस्त-
ज्वरभरमारचयेर्दये कदा माम् ॥ ६१ ॥

बत सहविहरद्दरस्मितानां
परिचरणाधिकृतारविन्दभासाम् ।
भगवति करुणे त्वयेरितानां
पथि किमसान्यहमीशवीक्षितानाम् ॥ ६२ ॥

सर्वज्ञत्वादिगुणाः
स्वात्मत्राणैकलम्पटा बहवः ।
शर्वस्य शंकराख्या-
निर्वहणं तदये त्वदायत्तम् ॥ ६३ ॥

श्रीकण्ठाय क्ष्वेलं
रोचितवत्या दये ननु भवत्या ।
मामकमन्तुकदम्बे
केवलमम्बेह वद विलम्बः कः ॥ ६४ ॥

शिव इति तद्भक्तिरिति
स्मृतिरस्य च सेति सार्तिहन्त्रीति ।
इयदवगमय्य शेषे
विरतिरियं शिवदये न ते सदृशी ॥ ६५ ॥

अब्जजयितुमच्युतयितु-
मपि शिवयितुमलमुमेशकरुणे त्वम् ।
अलमसि शिवरसिकाना-
मक्षिपथे किं न मां प्रवर्तयितुम् ॥ ६६ ॥

विजयस्व सिध्यतात्तव
विधुशेखरविप्रलम्भनैपुण्यम् ।
मन्मन्तुभिरुन्मिषितु च
मातः करुणे पिचण्डिलत्वं ते ॥ ६७ ॥

करुणे यदि मन्मन्तू-
　　न्कबलयसि न विप्रलब्धगिरिशा त्वम् ।
का मम गतिस्तवापि च
　　का गतिरागोभिरेव जीवन्त्याः ॥ ६८ ॥

करुणे त्वदध्वगानां
　　कामाद्या ये द्विषस्तदुन्मथने ।
गिरिशं त्वयेरयन्त्या
　　कुतोऽस्य भीमोग्रनामसंसर्गः ॥ ६९ ॥

शर्वं प्रति मन्मन्तुषु
　　सर्वज्ञतया निवेद्यमानेषु ।
आधूयतामम्ं दृढ-
　　मालिङ्ग्य दये नयाशु परवशताम् ॥ ७० ॥

अहह गिरिशैकताना-
　　मभिलषितस्थितिमनाप्नुवति मयि ताम् ।
आर्तिषु मज्जति वर्तितु-
　　मर्हसि न स्तब्धमेवमीशदये ॥ ७१ ॥

नागांसि यन्महान्त्यपि
गण्यन्ते गुणकणो बहु क्रियते ।
गिरिशेन तदनुगैरपि
तद्गिरिशे त्वन्निवेशतः करुणे ॥ ७२ ॥

मतिवागपदेऽनन्ते
महेश्वरे मननमनपूजाभिः ।
आगोभिरभावि गुणै-
रनुकम्पे तस्य तव परिष्वङ्गात् ॥ ७३ ॥

अवरुन्धत्या करुणे
हरं त्वया तस्य मामकस्वान्तम् ।
गेहं क्रियतामयि मे
साहंक्रियताज्वरं जिहीर्षसि चेत् ॥ ७४ ॥

कामारिणा निविष्टैः
कामादिभिरशरणस्त्वहं करुणे ।
ताड्ये किल किं न त्वं
तज्ज्ञपयसि तच्च किं न वारयसि ॥ ७५ ॥

अन्तकहरं पदं तव
हन्त दये ग्रातुमप्यनर्हं माम् ।
अकरोद्दुर्विधिरस्तु त-
दपनयने तव विलम्बनं नार्हम् ॥ ७६ ॥

दृष्टे मया त्वदोकसि
दृशानया सर्वमङ्गलाश्लिष्टे ।
करुणे का तव हानिः
कति कति तद्दर्शिनस्त्वया न कृताः ॥ ७७ ॥

दुग्धार्थिनो मुनिशिशो-
र्दुग्धाम्बुनिधिर्वशं नीतः ।
जलधिरपरस्य हस्ते
जलकणतां शिवदये न तेऽस्ति भरः ॥ ७८ ॥

अवतंसितेन्दुकन्दल-
माज्ञावशवर्तिपवनतपनादिम् ।
कलये दये तव झरं
कर्मपरब्रह्मगन्धिनिश्वासम् ॥ ७९ ॥

करुणेऽङ्गीकुर्या मां
कदाम्ब तमुमासखं चिदाकारम् ।
गलहस्तितविषयान्तर-
मासीनं मन्मतौ कदा कुर्याः ॥ ८० ॥

भयविरहमन्तकात्त्वं
प्रदिश परस्येव न मम किंतु भयम् ।
येन शिवेऽभिरतः स्यां
शिवानुकम्पे प्रसीद तदलं मे ॥ ८१ ॥

गौरीसखमुडुगौरं
कंदर्पसहस्रसुन्दराकारम् ।
नीलग्रीवमुदारं
निधेहि मन्मनसि तव दये पूरम् ॥ ८२ ॥



क्रन्देयं बत कं प्रतीह बलिना कामेन कामान्तकः
कामं पश्यति पीड्यमानमपि मां कालेन कालान्तकः ।
त्वं चेत्तस्य विभोर्भवत्कृतपरिष्वङ्गैरपाङ्गैर्दये
मामामोदयसे क्षतिस्तव तु का किं स्याच्च मेऽसौ दशा ॥

निद्रालस्यभरो वपुष्यतिजरा दुःसङ्ग ईर्ष्यामति-
  र्यत्र क्वापि हि कैश्चिदित्थमशुभैर्विघ्नैः परीतस्य मे ।
ईशानेऽभिरतिश्च निर्वृतिकथा क्लेशानुकम्पे कदा
  दीनान्वेषिणि मां त्वदभ्युपगमो दीनाग्रगण्यं स्पृशेत् ॥

तरणे भवस्य शरणैषिणा मया
  दुरितानि हन्त चरितान्यलं दये ।
उचितानि नैव रुचितानि मानसे
  लपितानि चैव कुपिताकृतीनि मे ॥ ८५ ॥

शमनावलेपदमनावहाम्ब किं
  न्वपुषन्न खिन्नवपुषं मृकण्डुजम् ।
भवती मदीयभवतीव्रतापहृ-
  त्तरुणेन्दुचूडकरुणे न किं भवेत् ॥ ८६ ॥

उचितं तवोपरचितं दये न किं
  प्रबलापराधकबलार्पणं मया ।
अयि शर्वमम्ब मयि शर्मदं न किं
  वितनोषि शंस बत नो यशोऽस्त्यतः ॥ ८७ ॥

गरले हरस्य तरलेतरां रुचिं
भवती दयेऽर्पितवती न मेंहसि ।
उदितादरात्र विदिता करालता
महिता न सा किमहितावहा तव ॥ ८८ ॥

कलिनामुनातिबलिना कदर्थितः
स्वहिते क्षमो न विहितेऽस्मि मादृशाम् ।
अवने श्रमस्तु तव नेशितुर्दये
जगति त्वयैव सगतिस्तदस्म्यहम् ॥ ८९ ॥

बलभेदनादिसुलभेतरं हरं
स्मरतो दलाम्बु किरतोऽपि निर्वसोः ।
नयसे वशं कलयसेऽद्भुतं दये-
ऽहमसावपीह किमसानि ते पदम् ॥ ९० ॥

स्मरणं प्रणामकरणं तथाभिधा-
गदनं च जातु चिदनङ्गवैरिणः ।
परमं भवार्तिहरमम्ब देहिनां
त्वदये गतिस्तव दये गरीयसी ॥ ९१ ॥

भवतापभीतमवताखिलं जनं
पुरमर्दनेन परमर्ज्यते यशः ।
घनमम्ब यद्भुवनमङ्गलं दये
तदये श्रमच्छिदुदये त्वदाश्रयात् ॥ ९२ ॥

भुवने तवाम्ब न वने पटुर्दये
परमत्र को नु स्मरमज्जितः स ते ।
श्रितमन्तुशैलशतमन्तकान्तको-
ऽखिलवेदिता न किल वेदितुं क्षमः ॥ ९३ ॥

मनसेह सर्वमनसेव यद्वहे
हरमेकमेव न रमे हि विस्मरन् ।
तदिमं त्वमेव हृदि मन्तुमाशु मे
करुणे यतस्व तरुणेन्दुशेखरम् ॥ ९४ ॥

किमतो ममाम्ब विमतो भवार्णव-
स्तुदतीह मां न नुदतीदृशं शुचम् ।
गिरिजापतेरुपरि जातु मे दये
हृदयं कुरुष्व सदयं च तं च माम् ॥ ९५ ॥

चरणं नतार्तिहरणं विभोर्दये
नृतमो भजेत कतमो विना त्वया ।
तदमुं तवाम्ब पदमुन्नतं नय
प्रभवे मदर्थिविभवेऽर्थिनी भव ॥ ९६ ॥

कमलासनश्च कमलापतिश्च ते
कलयाप्नुतां हि तुलया विहीनताम् ।
स्वकरावलम्बसुकरामृतश्रियं
कुरु मे कुलेशितुरुमेशितुर्दये ॥ ९७ ॥

अपराधजालमपरा नुदेत का
भवतीं विनोद्धृतवतीं जगद्दये ।
जननीं प्रमोदजननीमृते शिशोः
शमलं प्रमार्जितुमलं परा तु का ॥ ९८ ॥

उमापतिरमापती मम शिवौ जहीतां मनो
न जातु करुणे यथा कुरु तथैव बुद्धिं दृढाम् ।
तथैव रसनाममूं शिवशिवेति वागुद्धरां
नचैतदुभयं विना किमपि मेऽभिलाषास्पदम् ॥९९॥

प्रसीद करुणेऽधुना मनसि मे शिवं स्थापया-
नपायिनमुमासखं कुरु च मय्यनुग्राहकम् ।
तथानिशमिहासनं शिवपदस्य जिह्वाञ्चले
ददस्व मम काङ्क्षितद्वयमिदं त्वदेकायनम् ॥ १०० ॥

कालेऽन्तिमे शिवदयं मम ते प्रसादा-
देतावदेव हृदये दृढमाविरस्तु ।
यद्व्यक्षरं शिवशिवेति तवास्पदीयं
मोक्षप्रदं भुवनमङ्गलनामधेयम् ॥ १०१ ॥

एवं दयास्तवमिमं पठतां हि भक्त्या-
रोग्यायुरच्छशिवभक्तिधनर्द्धिविद्याः ।
अग्र्यान्सुतानपि यशश्च विमुक्तिमन्ते
श्रीपार्वतीशकरुणा दिशति प्रहृष्टा ॥ १०२ ॥

इति दयाशतकम् संपूर्णम् ॥



